सागरः माह मत्यक्षौ, धर्माधर्मौ स्त एव यत् ।
सन्त्येकेऽत्रैव सम्राजस्तद्भृत्याश्चापरे नराः ॥७१॥
इतश्च पश्चाद् दुःशिष्यैः, पृष्टः शय्यातरोऽवदत् ।
गुर्वाज्ञां भो ! स्वयं लुप्त्वा, दुष्टाः ! पृच्छत मां तु किम् ? ॥७२॥
त्यक्तास्तद्गुरुभिर्यूयं, यात दृष्टिपथान्मम ।
तेऽपि भीता क्षमयित्वा, शय्येशं जगदुः पुन ॥७३॥
दयां कृत्वैकवारं नः, शाधि याताः क सूरयः ।
श्राद्धोऽपि तत्र तान् मैषीद्, ज्ञात्वा सम्यगुपस्थितान् ॥७४॥
आगच्छतश्च तान् श्रुत्वा, शिशुरेति पितामहः ।
इति हृष्टः मशिष्योक्तः, सूरिः स्माहापि मे श्रुतम् ॥७५॥
दृष्ट्वा तानागत साधूनभ्युत्तस्थौ च सागरः ।
तैरूचे साधुसंघोऽयं, गुरवस्तु पुरागताः ॥७६॥
कालिकार्यं बहिर्भूम्यागतमभ्युत्थितान् मुनीन् ।
ऊचे प्रशिष्यः किमिदं, तेऽप्यूचुर्गुरवो ह्यमी ॥७७॥
क्षमयित्वाऽनुतप्यन्तं, सागरं स्माह सूरिराट् ।
माऽन्वताप्सीर्न ते मावदोषः किन्तु प्रमत्तता ॥७८॥
वालुकामस्थदृष्टान्तादुक्त्वास्य श्रुतस्मयम् ।
विनीतशिष्यसंवीता विजहुः सूरयोऽन्यतः ॥७९॥

( ५ )

अथान्यदा विदेहेषु, श्रीसीमन्धरसन्निधौ ।
निगोदजीवव्याख्यानं, श्रुत्वा शक्रोऽभ्यधादिति ॥८०॥
एवं स्वामिन् ! निगोदानां, व्याख्यां किं कोऽपि भारते ।
वेत्तीदानीं जिनोऽथाऽऽख्यत्, कालकार्या विदन्ति ताम् ॥८१॥
आगत्य कौतुकाच्छक्रः, कृत्वा वृद्धद्विजाकृतिम् ।
नत्वाऽप्राक्षीन्निगोदाऽऽख्यां, प्रभुश्चाऽऽह यथार्थतम् ॥८२॥
संख्यातीताः सन्ति गोला गोलेऽसंख्या निगोदकाः ।
एकैकस्मिन् निगोदेऽथ, सिद्धेभ्योऽनन्तजन्तवः ॥८३॥
इत्यादि सूरिणाऽऽख्याते, पुनः पप्रच्छ वासवः ।
प्रार्थयेऽहं तदाख्याहि, कियदायुर्मम प्रभो ! ॥८४॥
सूरिज्ञानोपयुक्तोऽभूद्, यावद् द्वे सागरोपमे ।
इन्द्रस्त्वमिति सूर्युक्ते, शक्रः स्वं रूपमाश्रयत् ॥८५॥

---

१० °यागमम् P ।

नत्वा स्तुत्वा च सूरीन्द्रमिन्द्रः स्वं स्थानमभ्यगात् ।
सूरिः स्वायुःपरिमाणं, ज्ञात्वा संलेखनां व्यधात् ॥८६॥
इति श्रीकालकाचार्याः, कृत्वा प्रवचनोन्नतिम् ।
यथाऽऽयुः पालयित्वा तेऽनशनेन दिवं ययुः ॥८७॥
श्रीरत्नसिंहसूरीणामन्तेवासी कथामिमाम् ।
चक्रे विनयचन्द्राऽऽख्य[ः], संक्षिप्तरुचिहेतवे ॥८८॥
यो गर्दभिल्लं जगदेकमल्लं, समूलमुन्मूलयति स्म राज्यात् ।
आनीतवान् पर्युस(ष)णाऽऽख्यपर्व, दिने चतुर्थ्यां स गुरु[ः] श्रिये वः ॥८९॥+

इति श्रीकालिकसूरिकथानकम् ॥

D आदर्शे प्रान्तोल्लेखः—सं. १६१२ वर्षे ॥ श्रीरस्तु ॥

P आदर्शे प्रान्तोल्लेखः—

सं० १३४४[?] वर्षे वैशाखशुदी अक्षततृतीयायां सोमे पर्युषणाकल्पपुस्तिका लिखिता ।

तस्मिन्नेवादर्शेऽन्याक्षरैर्लिखितमिदम्—

श्रीवर्द्धमानो जु.... सितमूलः पार्श्वादिसद्वृत्तचपृथुम.... ।
...शाखोञ्जलगच्छगुच्छः श्रेयःफलं यच्छतु कल्पवृक्षः ॥
शिवमस्तु श्रीः ॥

# [१६]

## पल्लिवालगच्छीयश्रीमहेश्वरसूरिविरचिता

# कालिकाचार्यकथा।

[ लेखनसं० १३६५ ]

ॐ नमः सर्वज्ञाय ॥

पञ्चम्यां विदितं पर्व, चतुर्थ्यां येन निर्मितम् ।
श्रीमतः कालिकाचार्यगुरोस्तस्य कथोच्यते ॥१॥

---

+ P आदर्शे नास्त्येतदन्तिमं पद्यद्वयम् ।

१ °श्रमीवि° P, °श्रमीस्थिनं H । २ श्रीमत्संघप्रसादेन, तत्कथा तुच्यते मया P, सांवत्सरीयं तस्योचैः कथा संप्रति कथ्यते C ।

धरावासपुरेशस्य, वैरिसिंहस्य नन्दनः ।
अभूतां सुरसुन्दर्यां, कालकश्च सरस्वती ॥२॥
कालकोऽन्येद्युरुद्याने, गतो मित्रैः पुरस्कृतः ।
गुणाकरगुरोर्बुद्धः, प्राव्राजीदनुजायुतः ॥३॥
शतसंख्या नरा नार्यस्तावन्तु प्राव्रजन्नथ ।
कालकं स्वपदे न्यासीद्, गुरुभिर्गुरुभिर्गुणैः ॥४॥
प्रवर्त्तिनीं च तज्जामिरवन्त्यामन्यदाऽगमत् ।
श्रीमन्तः कालकाचार्याः, साधु-साध्वीसमन्विताः ॥५॥
गर्दभिल्लोऽन्यदा वीक्ष्य(क्ष्या)वन्त्यां चैत्ये सरस्वतीम् ।
बलादन्तःपुरे न्यस्यात्, को विवेको हि कामिनाम् ॥६॥
तस्मिन् बोधवचः सूरेः, सघस्य च वृथाऽभवत् ।
अमात्यानां गिरा मिथ्या, क्षीणायुषमहौषधी ॥७॥
अथोन्मत्तकवेषेण, भ्रमन्निति ललाप सः ।
गर्दभिल्लो यदि नृपस्ततः स्यात् किमतः परम् ? ॥८॥
भिक्षेऽहं यदि शून्ये वा, वसामि किमतः परम् ? ।
मत्वेति बोधितोऽमात्यैर्नाबुध्यत नृपाधमः ॥९॥
श्रुत्वेति कुपितः सूरिः, सस्मारागमभाषितम् ।
संघादिकार्ये चक्रिसैन्यमप्यन्तयेन्मुनिः ॥१०॥
ध्यात्वेति शककूलेऽगात्, सामन्तास्तत्र शाखयः ।
नृपः शाखानुशाखिस्तु, कीर्त्यते देशभाषया ॥११॥
शाखमेकं च मन्त्राद्यैस्तस्थुरावर्ज्य सूरयः ।
क्षुरिकाप्राभृतस्तत्रान्यदा दूतः समागमत् ॥१२॥
शाखिः श्यामाननः पृष्टः, सूरिभिः मौह नः प्रभुः ।
क्रुद्धः प्रेषयते शस्त्रीं, तया छेद्य निजं शिरः ॥१३॥
कृपाणिकायामेतस्यां, षण्णवत्यङ्कवीक्षणात् ।
मन्ये षण्णवतेः सामन्ताना क्रुद्धो धराधिपः ॥१४॥
सर्वेऽपि गुप्तमाहूय, सूरिभिस्तेऽथ मेलिताः ।
तरीभिः सिन्धुमुत्तीर्य, सौराष्ट्रायां समाययुः ॥१५॥
वर्षाकाले तदायाते, गतिमत्यूहकारिणि ।
विधाय षण्णवत्यंशैः, सुराष्ट्रां तेऽवतस्थिरे ॥१६॥

३ °स्य भूभृत C । ४ °ने बाह्यकेल्यितो गुणी (°तो गुरु H) P । ५ °न्यदाभियाद् शुद्ध PH । ६ °दे न्यस्त P । ७ °नी त्वेत° PH । ८ °दाऽवन्तीपतिर्वीक्ष(क्ष्य)य° PH । ९ हि मानिनाम् PH । १० °शाखोत्पुल्ली° P । ११ °दा सूरि(रे) स° C । १२ °इ त[व]प्र° C । १३ °श्यां कृपाणिकाम्° C । १४ सामन्तानां षण्णवते[ ], क्रुद्धोऽन्येषां नराधिप C । १५ ते सर्वे सि° H । १६ वर्षारात्रे त° H ।

गुर्वादिष्टैश्च शरदि, तैरूचे नास्ति सम्बलम् ।
गुरुश्चूर्णेन सौवर्णमिष्टिकापाकमादधे ॥१७॥
संवलाद् बलवन्तैस्ते, मालवं लातुमिच्छवः ।
ते जग्मुः मालवे देशे, सूरिभिः प्रेरिताश्चिरात् ॥१८॥
गर्दभिल्लः ससैन्योऽपि, समेतस्तैर्महाबलैः ।
शाकैर्भग्नमविष्टान्तःपुर्या रुद्धा च तैः पुरी ॥१९॥
अथाष्टमीदिने दुर्गे, शून्ये पृष्टः शाकैर्गुरुः ।
आचख्यौ गर्दभीं विद्यां, प्रचण्डां साधयिष्यति ॥२०॥
तद्वचःश्रवणात् सर्वं, सैन्यं स्यान्मूर्च्छितं क्षणात् ।
गव्यूतेः परतः सैर्वं, शिबिरं तन्निवेश्यताम् ॥२१॥
अष्टोत्तरशतं शब्दवेधिनः सन्तु मेऽन्तिके ।
तथाकृतेऽथ तैः सूरिणोदितैः शब्दवेधिभिः ॥२२॥
तस्याः प्रसारितं वक्त्रं, तूर्णीचक्रे क्षणादपि ।
हतप्रभावा नष्टाऽथ, विद्याऽवद्यात्मनस्ततः ॥२३॥
गुर्वाज्ञया ततः पुर्यां, प्रविश्यानायितः शकैः ।
बद्ध्वा गर्दभवद् गर्दभिल्लो गुरुपदान्तिके ॥२४॥
स तैरूचे तवान्यायतरोः पुष्पमिदं तनु ।
फलं त्वन्यभवे भावि, घोरा नरकवेदना ॥२५॥
तद् धर्म्मं प्रतिपद्यस्वाधुनाऽपि जिनभाषितम् ।
इत्युक्तेऽप्यहृष्मुखो द्वेधा, चक्रे निर्विषयः स तैः ॥२६॥
मित्रं शाखि नरेन्द्रत्वे, सामन्तत्वेऽपरानपि ।
सूरयः स्थापयामासुर्निजं जामिं च संयमे ॥२७॥

( २ )

अथो भृगुपुरे राजा, युवराजश्च तिष्ठतः ।
बलमित्र-भानुमित्राभिधौ जामिसुतौ गुरोः ॥२८॥
प्रधानं प्रेष्य तौ सूरिमानैष्य शुष्प(ष्य)मानसौ ।
प्रवेश्य चक्रतुश्चैत्योत्सवं जितशतक्रतू ॥२९॥
सुतो नृपस्वसुर्भानुश्रियो धर्म्मं गुरोर्मुखात् ।
बलभानुः समाकर्ण्य, दक्षो दीक्षामुपाददे ॥३०॥

---

१७ °वन्तोऽपि मा° PH । १८ °पि समामेण म° C । १९ अथान्यदा दिनेऽष्टम्या दुर्गे शून्ये शकैर्गुरु° । पृष्टोऽसौ ग° C । २० °त् शत्रुखे° PH । २१ °व्यूतात् प° C । २२ °वं तच्छिबिरं नि° P । २३ रिवेष्टितः (रेन्दिते H) सन्दवेधिनः(भिः) C । २४ सूर्यात्र° PH । २५ गुर्वा(वं)न्तिके C । २६ °वि नानान° C । २७ °घ्य प्रात्स्यमानतः PH । २८ °व कालकसूरिभि (णः) C । २९ °पस्य आ° C ।

भक्तं वीत(स्य) नृपं क्रुद्धं, पुरोधाऽवि(वी)वदॅद् रयात् ।
निरुत्तरीकृतो भूॅपं, कैतवादित्यमापत ॥३१॥
वन्द्यपादपदाक्रान्तिर्महादोषप्रपोषिणी ।
नृपोऽथ तद्गिरा मूढोऽनेषणं नगरे व्यधात् ॥३२॥
एवं निरीक्ष्यॅ वर्षायामपि सूरिः श्रुगो[ः] पुरात् ।
महाराष्ट्रकिरीटाभं, प्रतिष्ठानॅपुरं गतः ॥३३॥

( ३ )

सातवाहनभूपेन, महद्धर्या स प्रवेशितः ।
विज्ञप्तश्च ससंघेन षष्ठ्यां पर्युषणा(णां) कुरु ॥३४॥
यतो लोकानुवृत्त्याऽत्रेन्द्रोत्सवं पञ्चमीदिने ।
सूरयः "प्रोचिरे पर्युषणा नात्येति पञ्चमी[म्] ॥३५॥
जिना गॅणेशास्तच्छिष्याः, पञ्चॅाशत्के दिने यथा ।
पुरा पर्युषितास्तद्वद्, गुरवो मे तथा वयम् ॥३६॥
चतुर्थ्यामस्त्विति प्रोक्ते, नृपेण गुरवो जगुः ।
अस्तु प्रोक्तं हि सिद्धान्ते, परिवासस्तथ्यमारतः ॥३७॥

( ४ )

स्वच्छन्दानन्यदा शिष्यान्, प्रोज्झ्य शय्यातराग्रत ।
आख्याय सागरचन्द्र, प्रशिष्यं सूरयो ययुः ॥३८॥
तेन नाभ्युत्थिता व्याख्याक्षणे तेऽज्ञातवृत्तयः ।
तस्थुस्तत्पृष्ठतः व्याख्याक्लान्तापनोधताः ॥३९॥
अथ शय्यातराज्ज्ञात्वा, मुनयोऽपि समाययुः ।
सूॅरिं ते(तं) क्षमयन्तस्ते, प्रतिष्ठाक्सतौ ततः ॥४०॥
ज्ञात्वा सागरचन्द्रोऽपि, ह्रीभरानतकन्धरः ।
नेत्राॅम्भसा गुरोः पादौ, मीत्या प्रक्षालयन्निव ॥४१॥
उत्थाप्य वालुकामस्यार्द्देस्य दृष्टान्तदर्शनात् ।
तॅत् संबोध्य यते! ज्ञाने, त्वं गर्वं मा कृथा वृथा ॥४२॥
यथा रिक्तो भवेत् भस्त्रः, स्थॅानान्तरविरेचनात् ।
स्थाने स्थाने विगलनाद्, यथा स्थान्स्थदलिका ॥४३॥
तथा गणेशाः पूर्वेभ्यो, वत्स! हीनोऽस्म्यहं क्रमात् ।
मॅत्तोऽपि हीनो म[द्]शिष्य[ः], तस्मै(स्मा)द्धीनो भवानपि ॥४४॥

३० °द् भुवा PH । ३१ भूपं कै° H । ३२ °स्य चान्येषुरागतेऽपि घनागमे P, °स्य च घनागमेऽपि घनागम H । ३३ °पुरेऽगमत् C । ३४ प्रोचु रे प° P । ३५ °गणेशास्तच्छिष्या प° P । ३६ पञ्चाशत्तमे दिने C । ३७ गुरुन् क्षमयितो(ता) वाद न पुन कारणेन च P । ३८ तस्यौ बाष्पजलै पादौ प्रयत क्षा(प्रभो प्रक्षा H)लयन्निव PH । ३९ तं संबन्धमदक्षा° PH । ४० स्थानस्थाननिवेशनात् H । ४१ अतस्ते गुरवस्तस्मात् त्वं च हीनतरस्तथा P, भस्मात्तस्ते गुरुस्तस्माद् [illegible] हीनतरस्तथा H ।

प्रज्ञापरीषहः सोऽयं, वत्स ! सह्यस्ततस्त्वया ।
इत्युक्तः स गुरोर्वाचं, तथेति प्रति(त्य)पद्यत ॥४५॥

( ५ )

शक्रोऽन्यदा निगोदानां, व्याख्यां सीमन्धरप्रभोः ।
श्रुत्वा पप्रच्छ भ(भा)रते, व्याख्यात्येवंविधं हि कः ? ॥४६॥
विज्ञाय कालिकाचार्यं, विप्रवेषः समागमत् ।
तद्व्याख्यैानश्रुतेर्हृष्टो, निगोदानां विचारणात् ॥४७॥
गोलोइ असंखिज्जा, असंखनिगोयगोलओ भणिओ ।
इक्किक्कं पि निगोए, अणंतजीवा मुणेयव्वा ॥४८॥
विमेर्णायुषि पृष्टो(ष्टे), शक्रोऽसीति गुरुर्जगौ ।
दृष्टः सोऽथ निजं रूपं, प्रकाश्यैवं तमस्तवीत् ॥४९॥
जय प्रवचनाधार !, जय संसारतारक ! ।
जय सीमन्धरस्वामिस्तुतैः, श्रीमन् ! नमोऽस्तु ते ॥५०॥
स्तुत्वेतीन्द्रोऽन्यतो द्वारं, विधाय तदुपाश्रये ।
गतो दिवं सूरिरपि, प्रपाल्यायुर्ययौ दिवम् ॥५१॥
सांवत्सरीयं सत्पर्व, चतुर्थ्यां येन निर्मितम् ।
युगप्रधानः सूरीन्द्रो, जीया[त्] नित्यं स कालकः ॥५२॥

इति श्रीपल्लिवालगच्छे महेश्वरसूरिभि-
र्विरचिता कालिकाचार्यकथा समाप्ता ॥

Cसंज्ञकप्रतिप्रान्ते प्रशस्तिरियम्—

श्रीमालवंशोऽस्ति विशालकीर्तिः,
श्रीशान्तिसूरिः(रि)प्रतिबोधितश्रीढक्काख्य[ः] ।
श्रीविक्रमाद् वेद नर्मार्षिवत्सरे
श्रीआदिचैत्यकारापितनवहरे च (?) ॥१॥
तस्य शाखासमुद्भूतदेवसिंहो गुणाधिकः ।
तत्सुतः कर्मसिंहस्याभूत(त्) पुत्रो मल्लसिंहक[ः] ॥२॥

४२ °नस्तु(श्रु)त इह पप्रच्छायुर्निज श्रवा PH । ४३ नास्तीयं गाथा PH पुस्तकयोः । ४४ सूरि श्रुतेन विज्ञाय, शक्रोऽसीति अवाद तम् इ° PH । ४५ °त ! स्वामिन् ! P । ४६ कल्पोक्तवत्तु पञ्चम्यां(म्याः) चतुर्थ्यां येन कारितम् । संविनामि(म)न धीमान् श्रीयान् सूरिः स कालकः ॥५२॥ य श्रीपर्युषणां महागुणगणां षके चतुर्थीदिने, पञ्चम्या इह शालिवाहन-महीपालस्य विज्ञप्तितः । नानान्वियुजे जिनप्रवचनप्रोत्सर्पिणा कारिणा, तस्मै कालकसूरये युगवराग्र्ये नमो भक्तितः ॥५३॥

इति श्रीकालिकाचार्यकथानकम् समाप्तम् P ।,

षट्स्थानपतितान्मत्वा श्रुतकत्स्नोऽपि हि । न गर्वं सर्वथाकार्यं सूरिकालकचन्द्रवत् ॥५२॥ चतुर्थीपर्युषणापर्वस्थापकस्य श्रीकालिकाचार्यस्य संस्कृतभाषायां कथानिका लिखिता H ॥

महीरोलनगोत्रे च, मण्डनो धान्यकाभिध[ः] ।
तत्सुता[ः] त्रय[ः] संजाता ऊदल-देदाकनामतः ॥३॥
गोत्रमण्डनहालाकपत्नी यस्य चतुष्टयी ।
सी(शी)लालङ्कारधारी च, आभू पत्नी च मइणला (?) ॥४॥
षड्दर्शन[सु]भक्ता च, श्रीरिवा(व) हरिमण्डनी ।
अर्द्धाङ्गलक्ष्मी[ः] साहु, मल्लसिंहस्य पुण्यभूम् ॥५॥
पञ्च पुत्रा[ः] पवित्राश्च, पञ्चपुत्री(त्र्यः) सतीव्रताः ।
कल्पद्रुमसमानेऽपि, संघशासनसेवकान्(काः) ॥६॥
धारा-रतन-लाखाको, जइतसिंह-भीमकौ ।
रूदी पूनी च चांद् च, रुक्मिणी सोनणी तथा ॥७॥
धारापत्नी च सुव्रता, जयश्री [च] तदङ्गना[ताः] ।
वेदमिवा(दा इव) चतुष्टय(यी),सखम्मणो पांप(खांख)ण-मदनकौ च ॥
रत्नस्य रत्नाकरतुल्यरूप[ः]
धर्मसिंहवीर[ः] स्वजनप्रियश्च ? ॥८॥
रामापुत्रस्तु खेताक[ः], धर्मो लाखाकनन्दनः ।
जइतसिंहसुतो हान्त्र[ः], भीमापुत्री स(सु)लखणी ॥९॥
स्वश्रेयसे कारितकल्पपुस्तिका,
स(सा)ह्वकपुण्योदयरत्नभूमिः ।
श्रीपल्लिगच्छे स्वगुणो(णौ)कधाम्ना,
[सु]वाचिता श्री(साऽपि) महेश्वरसूरिभिः(रेण) ॥१०॥

नृपविक्रमकालातीत सं० १३६५ वर्षे भाद्रपदस्य नवम्यां तिथौ श्रीमेदपाटमण्डले वऊणाग्रामे पुस्तिका लिखिता ॥

उदयानलचौरेभ्यः, मूल(प)केभ्यस्तथैव च ।
रक्षणीयात् प्रयत्नेन, यस्मात् न मिथेते (?) ॥१॥

मङ्गल महाश्री । शुभं भवतु ॥

अस्यामेव प्रतिप्रान्ते पुष्पिकेयम्—

संवत् १३७८ वर्षे भाद्रपदशुदि ४ श्रावक मोल्हासुतेन भार्याउदयसिरिसमन्वितेन पुत्रसोमा-छापा-पेता-सहितेन श्रावकऊदाकेन श्रीकल्पपुस्तिका गृहीत्वा श्रीअभयदेवसूरीणा समर्पिता वाचिता च ॥

Hसंज्ञकप्रतिप्रान्ते लिखितमिदमधिकम्—

जं रयणिं कालगओ, अरिहा तित्थंकरा महावीरो ।
तं रयणिं अवंतिवई, अहिसित्तो पालओ राया ॥१॥

पालयरज्ज सट्ठी(६०), पणपन्नसय(१५५) नवण्हनंदाण ।
मोरीणं अट्ठसय(१०८), तीसं(३०) वरिमाण पूसमित्तस्स ॥२॥
बलमित्त भाणुमित्ता, सट्ठी(६०) नरवाहणस्स चालिसा(४०) ।
ततो गर्दभिल्लः ॥

पालकराज्यम् ६४(६०)। नवनन्दराज्यम् १५५। मौर्यराज्यम् १०८। पुष्यमित्रराज्यम् ३० । श्री-कालिकसूरिभ्रात(भागिनेय)बलमित्र–भानुमित्रौ राज–युवराजौ । तद्भगिनी भानुश्रीस्तत्सुनुर्बलभानुमित्र[राज्यम्]६०।

श्रीवीरात् ४५३ गर्दभिल्लोच्छेदक कालिकाचार्य । उक्तं च प्रथमानुयोगसारोद्धारे युगप्रधानदण्डिकाया प्रथमोदये—

तह गद्दभिल्लरज्जस्स, छेयगो कालका[य]रिओ होही ॥
निव्वाणनिसाए गोयमपालियनिवो अवंतीए ।
होही पाडल्पिपहू, सो पुरियउ उदाय(यि)निवमरणे ॥

वीरात् ९९३ चतुर्थी पर्युषणाकारकोऽन्यः कालिकाचार्य । प्रथमानुयोगसारोद्धारे युगप्रधानदण्डिकाया द्वितीयोदये—

नवसए तेणउए(९९३) सलु, समइक्कतेहिं वीरवद्धमाणाओ ।
पज्जोसवणाचउत्थी, कालिगसूरीहिंतो ठविया ॥
पूरिया लक्ख तिगदीणा रयणासय समस्स तियं ।
जो सालवाहणमिव, सट्ठी कासीइ य पइट्ठाणे ॥

श्रीवीरात् ३३५ निगोदव्याख्याता प्रथमकालिकाचार्य ।

अस्या एव प्रतिप्रान्त पुष्पिकेयम्—

सवत् १६६६ वर्षे मार्गशीर्षमासे शुक्लपक्षे एकादश्या तिथौ अमृतवासर श्रीस्तम्भतीर्थे पिप्फलगच्छे पण्डितश्री-कान्हजीत(लि)पीकृत स्ववाचनाय वा परोपकाराय ॥ यादृशमहात्मा चद्रतगी परि निर्मला निष्कलङ्का स्वभाजीविकाङ्गत्या ॥

[१७]

श्रीप्रभाचन्द्राचार्यविरचितं

प्रभावकचरितान्तर्गत

# कालकचरितम् ॥

[ रचनासंवत् १३३४ ]



श्रीसीमन्धरतीर्थेशविदितोऽनणुतो गुणात् ।
कुतश्चिदपि सोऽव्याद् वः, कालकसूरिकुञ्जरः ॥१॥
प्राच्यैर्बहुश्रुतैर्वृत्तं, यस्य पर्युषणाश्रयम् ।
आहत कीर्त्यते किं न, धारूटी शक्रटानुगा ॥२॥
श्रीधरावासमित्यस्ति, नगर न गरो जयी ।
द्विजिह्वास्यसमुद्गीर्णो, यत्र साधुवचोऽमृतैः ॥३॥
आधाकर्म्मावलम्बाढ्या, महावल्कभरोच्छ्रिता ।
कीर्त्तिपताकिका यस्याक्रान्तव्योमा गुणाश्रया ॥४॥ युग्मम् ॥
श्रीवैरिसिंह इत्यस्ति, राजा विक्रमराजितः ।
यत्प्रतापो रिपुस्त्रीणां, पत्रवल्लीरशोषयत् ॥५॥
तस्य श्रीरोपकान्तेव, कान्ताऽस्ति सुरसुन्दरी ।
उत्पत्तिभूमिर्भद्रस्य, महाभोगविराजिनः ॥६॥
जयन्त इव शक्रस्य, शशाङ्क इव वारिधेः ।
कालको कालकोदण्डखण्डितारिसुतोऽभवत् ॥७॥
सुता सरस्वती नाम्ना, ब्रह्मभूर्विश्वपावना ।
यदागमात् समुद्रोऽपि, गुरुः सर्वाश्रयोऽभवत् ॥८॥
कालकोऽश्वकलाकेलिकलनायान्यदा बहिः ।
पुरस्य भुवमायासीदनायासी हयश्रमे ॥९॥
तत्र धौरितकात् प्लुत्या, वल्गितेनापि वाहयन् ।
उत्तेजिताद्भुतसद्गत्या, हयानुत्तेरितादपि ॥१०॥
श्रान्तस्तिमितगन्धर्वो, गन्धर्व इव रूपतः ।
अशृणोन्मधुरोदार, स्वरमाराममध्यतः ॥११॥
अथाह मन्त्रिणं राजपुत्रः कीदृक् स्वरो ह्यसौ ।
मेघगर्जितगम्भीरः, कस्य वा ज्ञायतां ततः ॥१२॥

व्यजिज्ञपत् ॥ विज्ञाय, नाथ ! सूरिर्गुणाकरः ।
प्रशान्तपावनीं मूर्तिं, बिभ्रद् धर्मं दिशत्यसौ ॥१३॥
विश्राम्यन्नित्र्नृपारामे, श्रूयतेऽस्य वचोऽमृतम् ।
अस्त्वेवमिति सर्वानुज्ञात तत्राभ्यगादसौ ॥१४॥
गुरुं नत्वोपविष्टे च, विशेषादुपचक्रमे ।
धर्माख्या योग्यता ज्ञात्वा, तस्य ज्ञानोपयोगतः ॥१५॥
धर्मार्हद्गुरुतत्त्वानि, सम्यग् विज्ञाय संश्रय ।
ज्ञान-दर्शन चारित्ररत्नत्रयविचारक ॥१६॥
धर्मो जीवदयामूलः, सर्वविद् देवता जिनः ।
ब्रह्मचारी गुरुः सङ्गभङ्गभू रागभङ्गभित् ॥१७॥
व्रतपञ्चकसंवीतो, यतीनां संयमाश्रितः ।
दशप्रकारसंस्कारो, धर्मः कर्मच्छिदाकरः ॥१८॥
य एकदिनमप्येकचित्त आराधयेदमुम् ।
मोक्षं वैमानिकत्वं वा, स प्राप्नोति न संशयः ॥१९॥
अथो गृहस्थधर्मश्च, व्रतद्वादशकान्वितः ।
दान-शील-तपो भावभङ्गीभिरभितः शुभः ॥२०॥
स सम्यक् पाल्यमानश्च, शनैर्मोक्षप्रदो नृणाम् ।
जैनोपदेश एकोऽपि, संसाराम्भोनिधेस्तरी ॥२१॥
श्रुत्वेत्याह कुमारोऽपि, मद्गिनीमङ्गिनीं दिश ।
दीक्षा मोक्ष यथा ज्ञानवेलाकुल लभे लघु ॥२२॥
पितरौ स्वावनुज्ञाप्यागच्छ तद् तेऽस्तु चिन्तितम्
अत्यादरेण तत् कृत्वाऽऽजाम्या सहितस्ततः ॥२३॥
प्रव्रज्याऽदायि तैस्तस्य, तया युक्तस्य च स्वयम् ।
अधीती सर्वशास्त्राणि, स प्रज्ञाऽतिशयादभूत् ॥२४॥
स्वपट्टे कालकं योग्यं, प्रतिष्ठाप्य गुरुस्ततः ।
श्रीमान् गुणाकरः सूरिः, प्रेत्यकार्याण्यसाधयत् ॥२५॥
अथ श्रीकालकाचार्यो, विहरन्नन्यदा ययौ ।
पुरीमुज्जयिनीं बाह्यारामेऽस्याः समवासरत् ॥२६॥
मोहान्धतमसे तत्र, मग्नानां भव्यजन्मिनाम् ।
सम्यगर्थप्रकाशोऽभूत्, प्रभूर्णमणिदीपवत् ॥२७॥
तत्र श्रीगर्दभिल्लाख्यः, पुर्या राजा महाबल ।
कदाचित् पुरबाह्योर्व्यां, कुर्वाणो राजपाटिकाम् ॥२८॥
कर्मसंयोगतस्तत्र, व्रजन्तीमैक्षत स्वयम् ।
जामिं कालकसूरीणां, काको दधिघटीमिव ॥२९॥ युग्मम् ॥

हा ! रक्ष रक्ष सोदर्य !, क्रन्दन्तीं करुणस्वरम् ।
अपाजीहरदत्युग्रकर्मभिः पुरुषैः स ताम् ॥३०॥
साध्वीभ्यस्तत् परिज्ञाय, कालकप्रभुरप्यथ ।
स्वयं राजसभज्यायां, गत्वाऽवादीत् तदग्रतः ॥३१॥
वृत्तिर्विधीयते कच्छे, रक्षायै फलसंपदः ।
फलानि भक्षयेत् सैवारूयेयं कस्याग्रतस्तदा ॥३२॥
राजन् ! समग्रवर्णानां, दर्शननां च रक्षकः ।
त्वमेव तन्न ते युक्तं, दर्शनिव्रतलोपनम् ॥३३॥
उन्मत्तकत्रयोन्मत्तवदुन्मत्तो नृपाधमः ।
न मानयति गामस्य, म्लेच्छवद् ध्वंसते यथा ॥३४॥
संघेन मन्त्रिभिः पौरैरपि विज्ञापितो दृढम् ।
अवाजीगणदारूढो, मिथ्यामोहे गलन्मतिः ॥३५॥
प्राकुशाग्रतेज आचार्य उग्रिद्रममजत् ततः ।
प्रतिज्ञां विदधे घोरां, तदा कातरतापनीम् ॥३६॥
जैनापभ्राजिनां ब्रह्मबालप्रमुखघातिनाम् ।
अर्हद्विम्बविहन्तॄणां, लिप्येऽहं पाप्मना स्फुटम् ॥३७॥
न चेदुच्छेदये शीघ्रं, सपुत्र–पशु–बान्धवम् ।
अन्यायकर्दमक्रोडं, त्रिभुवन्तं नृपशुवम् ॥३८॥ युग्मम् ॥
असंभाव्यमिदं तत्र, सामान्यजनदुष्करम् ।
उक्त्वा निष्क्रम्य दम्भेनोन्मत्तवेषं चकार सः ॥३९॥
एकाकी भ्रमति स्मायं, चतुष्के चत्वरे त्रिके ।
असम्बद्धं वदन् द्वित्रिश्चेतनाशून्यवत् तदा ॥४०॥
गर्दभिल्लो नरेन्द्रश्चेत्, ततस्तु किमतः परम् ? ।
यदि देशः समृद्धोऽस्ति, ततस्तु किमतः परम् ? ॥४१॥
वदन्तमिति तं श्रुत्वा, जनाः प्राहुः कृपाभरात् ।
स्वसुर्विरहितः सूरिस्ताटग् ग्रहिलतां गतः ॥४२॥ युग्मम् ॥
दिनैः कतिपयैस्तस्माचिर्ययावेक एव सः ।
पश्चिमां दिशमाश्रित्य, सिन्धुतीरमगाच्छनैः ॥४३॥
शाखिदेशश्च तत्रास्ति, राजानस्तत्र शाखयः ।
शकापराभिधाः सन्ति, नवतिः षड्भिरर्गला ॥४४॥
तेषामेकोऽधिराजोऽस्ति, सप्तलक्षतुरङ्गमः ।
तुरङ्गायुतमानाश्चापरेऽपि स्युर्नरेश्वराः ॥४५॥
एको माण्डलिकस्तेषां, मैत्रिं कालकसूरिणा ।
अनेककौतुकोत्साहहृतचित्तः कृतोऽथ सः ॥४६॥

असौ विश्वासतस्तस्य, प्रययति तथा नृपः ।
तं विना न रतिस्तस्य, तं बहूनैर्यया क्षणम् ॥४७॥
सभायामुपविष्टस्य, मण्डलेशस्य सूरिणा ।
सुखेन तिष्ठतो गोष्ठ्यां, राजदूतः समाययौ ॥४८॥
प्रवेशितश्च विज्ञप्ते, प्रतीहारेण सोऽवदत् ।
प्राचीनरूढितो भक्त्या, गृह्यतां राजशासनम् ॥४९॥
असिधेनुं च भूपोऽथ, तद् गृहीत्वाऽऽशु मस्तके ।
ऊर्ध्वीभूयाथ संयोज्य, वाचयामास च स्वयम् ॥५०॥
इति कृत्वा विवर्णास्यो, वक्तुमप्यक्षमो नृपः ।
निलीनचित्तः श्यामाङ्गो, निःशब्दापाठमेषवत् ॥५१॥
पृष्टश्चित्रान्मुनीन्द्रेण, प्रसादे स्वामिनः स्फुटे ।
आयाते प्राभृते हर्षस्थाने किं विपरीतता ? ॥५२॥
तेनोचे मित्र! कोपोऽयं, न प्रसादः प्रभोर्ननु ।
प्रेष्यं मया शिरश्छित्वा, स्त्रीयं शस्त्रिकयाऽनया ॥५३॥
एवं कृते च वंशे नः, प्रभुत्वमवतिष्ठते ।
नो चेद् राज्यस्य राष्ट्रस्य, विनाशः समुपस्थितः ॥५४॥
शस्त्रिकायामथैतस्यां, पण्णवत्यङ्कदर्शनात् ।
मन्ये पण्णवतेः सामन्तानां क्रुद्धो धराधिपः ॥५५॥
सर्वेऽपि गुप्तमाहाय्य, सूरिभिस्तत्र मेलिताः ।
तरीभिः सिन्धुमुत्तीर्य, सुराष्ट्रां ते समाययुः ॥५६॥
घनागमे समायाते, तेषां गतिविलम्बके ।
विभज्य पण्णवत्यंशैस्तं देशं तेऽवतस्थिरे ॥५७॥
राजानस्ते तथा सूरा वाहिनीव्यूहदुर्दिना ।
राजहंसद्रुहा भूयस्तरवारितरङ्गिणा ॥५८॥
चलभिद्धनुरुल्लासवता चाशुगमीभृता ।
समारुध्यन्त मेघेन बलिष्ठेनेव शत्रुणा ॥५९॥
निर्गमय्यासनादुग्रमुपसर्गमुपस्थितम् ।
प्रादुर्धनात्ययं मित्रमिवाब्जास्य विकाशनम् ॥६०॥
परिपक्त्रिमवाकृशालिः, प्रसीदत्सर्वतोमुखः ।
अभूच्छरहतुस्तेषामानन्दाय सुधीरिव ॥६१॥
सूरिणाऽथ सुहृद्राजा, प्रयाणेऽजल्प्यत स्फुटम् ।
स प्राह शम्बलं नास्ति, येन नो भावि शं बलम् ॥६२॥
श्रुत्वेति कुम्भकारस्य, गृहं एकत्र जग्मिवान् ।
वह्निना पच्यमानं चेष्टकापाकं ददर्श च ॥६३॥

कनिष्ठिकानखं पूर्ण, चूर्णयोगस्य कस्यचित् ।
आक्षेपात् तत्र चिक्षेपाक्षेप्यशक्तिस्तदा गुरुः ॥६४॥
विध्यातेऽत्र ययावग्रे, राज्ञः प्रोवाच यत् सखे!।
विभज्य हेम गृह्णीत, यात्रासंवाहहेतवे ॥६५॥
तथेत्यादेशमाधाय, तेऽकुर्वन् पर्व सर्वतः ।
मास्थानिकं गजाश्वादिसैन्यपूजनपूर्वकम् ॥६६॥
पञ्चाल-लाटराष्ट्रेशभूपान् जित्वाऽथ सर्वतः ।
शका मालवसन्धि ते, प्रापुराक्रान्तविद्विषः ॥६७॥
श्रुत्वाऽपि बलमागच्छद्, विद्यासामर्थ्यगर्वितः ।
गर्दभिल्लनरेन्द्रो न, पुरीदुर्गमसज्जयत् ॥६८॥
अथाप शाखिसैन्यं च, विशालातलमेदिनीम् ।
पतङ्गसैन्यवत् सर्वप्राणिवर्गभयङ्करम् ॥६९॥
मध्यस्थो भूपतिः सोऽथ, गर्दभीविद्यया बले ।
नादर्पुन्मादरीतिस्थः, सैन्यं सज्जयति स्म न ॥७०॥
कपिशीर्षेषु नो डिम्बा, कोट्टकोणेषु न प्रसाः ।
विद्याधरीषु नो काण्डपूरणं चूरणं द्विषाम् ॥७१॥
न वा मटकपाटानि, पुःप्रतोलीष्वसज्जयत् ।
इति चारैः परिज्ञाय, सुहृद्भूपं जगौ गुरुः ॥७२॥
अनावृतं समीक्ष्येदं, दुर्गं मा भूस्त्वुद्यमः ।
यदष्टमी चतुर्दश्योरर्चयत्येष गर्दभीम् ॥७३॥
अष्टोत्तरसहस्रं च, जपत्येकाग्रमानसः ।
शब्दं करोति जापान्ते, विद्या सा रासभीनिभम् ॥७४॥
तं धूत्कारस्वरं घोरं, द्विपदो वा चतुष्पदः ।
यः शृणोति स वक्त्रेण, फेनं मुञ्चन् विपद्यते ॥७५॥
अर्धतृतीयगव्यूतमध्ये स्थेयं न केनचित् ।
आवासान् विरचान्! दत्वा स्थातव्यं सबलैर्नृपैः ॥७६॥
इत्याकर्ण्य कृते तत्र, देशे कालकसद्गुरुः ।
सुभटानां शतं सार्धं, मार्गयच्छब्दवेधिनाम् ॥७७॥
स्थापिताः स्वसमीपे ते, लब्धलक्षाः सुशिक्षिताः ।
स्वरकाले मुखं तस्या बभ्रुर्बाणैर्निषङ्गवत् ॥७८॥
सा मूर्ध्नि गर्दभिल्लस्य, कृत्वा विण्मूत्रमीर्ष्यया ।
हत्वा च पादघातेन, रोषेणान्तर्दधे खरी ॥७९॥
अबलोऽयमिति ख्यापयित्वा तेषां पुरो गुरुः ।
समग्रसैन्यमानीय, मानी तं दुर्गमाविशत् ॥८०॥

पातयित्वा धृतो बद्ध्वा, मपात्य च गुरोः पुरः ।
गर्दभिल्लो भटैर्मुक्तः, प्राह तं कालकप्रभुः ॥८१॥
साध्वी साध्वी त्वया पाप!, श्येनेन चटकेव यत् ।
नीता गुरुविनीताऽपि, तत्कर्मद्रुमुमं ह्यदः ॥८२॥
फलं तु नरकः प्रेत्य, तद् विबुध्याधुनाऽपि हि ।
उपशान्तः समादत्स्व, प्रायश्चित्तं शुभावहम् ॥८३॥
आराधकः परं लोकं, भविता रुचितं निजम् ।
विधेहीति श्रुतेर्दूनस्त्यक्तोऽरण्ये ततोऽभ्रमत् ॥८४॥
व्याघ्रेण भक्षितो भ्राम्यन्, दुर्गतो दुर्गतिं गतः ।
तादृक् साधुद्रुहामीदृग्, गतिरत्यल्पकं फलम् ॥८५॥
सूरेरादेशतो मित्रं, भूपः स्वामी सतोऽभवत् ।
विभज्य देशमन्येऽपि, तस्थुः शाखिनराधिपाः ॥८६॥
आरोपिता व्रते साध्वी, गुरुणाथ सरस्वती ।
आलोचितमतिक्रान्ता, गुणश्रेणिमवाप च ॥८७॥
विद्यादेव्यो यतः सर्वा अनिच्छुस्त्रीनतच्छिदः ।
कुप्यन्ति रावणोऽपीदृक्, सीतायां न दधौ हठम् ॥८८॥
एवादृक्शासनोन्नत्या, जैनतीर्थं प्रभावयन् ।
बोधयन् शाखिराजांश्च, कालकः सूरिराड् बभौ ॥८९॥
शकानां वंशमुच्छेद्य, कालेन कियताऽपि हि ।
राजा श्रीविक्रमादित्यः, सार्वभौमोपमोऽभवत् ॥९०॥
॥ चोन्नतमहासिद्धिः, सौवर्णपुरुषोदयात् ।
मेदिनीमनृणां कृत्वाऽचीकरद् वत्सरं निजम् ॥९१॥
ततो वर्षशते पञ्चत्रिंशता साधिके पुनः ।
तस्य राज्ञोऽन्वयं हत्वा, वत्सरः स्थापितः शकैः ॥९२॥
इति प्रसङ्गतोऽजल्पि, प्रस्तुतं प्रोच्यते ह्यदः ।
श्रीकालकप्रभुर्देशे, विजह्रे राजपूजितः ॥९३॥

(२)

इतश्चास्ति पुरं लाटललाटतिलकप्रभम् ।
भृगुकच्छनृपस्तत्र, बलमित्रोऽभिधानतः ॥९४॥
भानुमित्राग्रजन्माऽसीत्, स्वस्त्रीयः कालकप्रभोः ।
स्वसा तयोश्च भानुश्रीः, बलभानुश्च तत्सुतः ॥९५॥ युग्मम् ॥
अन्यदा कालकाचार्यवृत्तं तैर्लोकतः श्रुतम् ।
तोषादाहूतये मन्त्री, तैर्निजः प्रैष्यत प्रभोः ॥९६॥

विहरन्तस्ततस्ते चार्मतिवर्द्धं विबुद्धये ।
आययुर्नगरे तत्र, बहिश्च समवासरन् ॥९७॥
राजा श्रीबलमित्रोऽपि, ज्ञात्वाऽभिमुखमभ्यगात् ।
उत्सवातिशयात् सूरिप्रवेशं विदधे मुदा ॥९८॥
उपदेशामृतैस्तत्र, सिञ्चन् भव्यानसौ प्रभुः ।
पुष्करावर्त्तवत् तेषां, विश्व तापमनीनशत् ॥९९॥
श्रीमच्छकुनिकातीर्थस्थितं श्रीमुनिसुव्रतम् ।
प्रणम्य तच्चरित्राख्यादिभिर्नृपमबोधयत् ॥१००॥
अन्येद्युस्तत्पुरोधाश्च, मिथ्यात्वग्रहसद्ग्रहः ।
कुविकल्पवितण्डाभिर्वदन् वादे जितः स तैः ॥१०१॥
ततोऽनुकूलवृत्त्याऽथ, तं सूरिमुपसर्गयन् ।
उवाच दम्भमत्या स, राजानमृजुचेतसम् ॥१०२॥
नाथामी गुरवो देवा इव पूज्या जगत्यपि ।
एतेषां पादुका पुण्या, जनैर्धार्या स्वमूर्धनि ॥१०३॥
किञ्चिद् विज्ञप्यते लोकभूपालानां हितं मया ।
अवधारय तच्चित्ते, भक्तिश्चेन्मातुले गुरौ ॥१०४॥
विशतां नगरान्तर्यच्चरणा विम्बिताः पथि ।
उल्लङ्घयन्ते जनैरन्यैः, सामान्यैस्तदघं बहु ॥१०५॥
धर्मार्जनं तनीयोऽशापरं कुरु महामते ! ।
प्रतीत आर्जवाद् राजा, प्राहास्ते सङ्कटं महत् ॥१०६॥
विद्वांसो मातुलास्तीर्थरूपाः सर्वार्चिता इमे ।
तथा वर्षां अवस्थाप्य, पार्यन्ते प्रेषितुं किमु ॥१०७॥
द्विजः प्राह महीनाथ !, मन्त्रये ते हितं सुखम् ।
तव धर्मो यतस्ते च, प्रयास्यन्ति स्वयं सुखात् ॥१०८॥
नगरे डिण्डिमो वाद्यः, सर्वत्र स्वामिपूजिताः ।
प्रतिलाभ्या वराहारैर्गुरवो राजशासनात् ॥१०९॥
आहारमाधाकर्मादि, दृष्ट्वाऽनेषणयाऽन्वितम् ।
स्वयं ते निर्गमिष्यन्ति, काऽप्यश्लाघा न ते पुनः ॥११०॥
अस्त्वेवमिति राज्ञोक्ते, स तथेति न्यधाद् पुरे ।
अनेषणां च ते दृष्ट्वा, यतयो गुरुमभ्यधुः ॥१११॥
प्रभो ! सर्वत्र मिष्टाहारः संप्राप्यतेतराम् ।
गुरुराहोपसर्गोऽयं प्रत्यनीकादुपस्थितः ॥११२॥

गन्तव्यं तत् प्रतिष्ठानपुरे संयमयात्रया ।
श्रीसातवाहनो राजा, तत्र जैनो दृढव्रतः ॥११३॥

( ३ )

ततो यतिद्वयं तत्र, प्रैषि सङ्घाय सूरिभिः ।
प्राप्तेष्वस्मासु कर्त्तव्य, पर्वपर्युषण ध्रुवम् ॥११४॥
तौ तत्र सङ्गतौ संयमानितौ वाचिकं गुरोः ।
तत्राकययतां मेने, तेनैतत् परया मुदा ॥११५॥
श्रीकालकप्रभुः प्राप, शनैस्तन्नगरं ततः ।
श्रीसातवाहनस्तस्य, प्रवेशोत्सवमातनोत् ॥११६॥
उपपर्युषणं तत्र, राजा व्यज्ञपयद् गुरुम् ।
अत्र देशे प्रभो ! भावी, शक्रध्वजमहोत्सवः ॥११७॥
नभस्यशुक्लपञ्चम्यां, तत पष्ठयां विधीयताम् ।
स्वं पर्व नैकचित्तत्व, धर्मे नो लोकपर्वणि ॥११८॥
प्रभुराह प्रजापाल !, पुरार्हद्गणभृद्गणः ।
पञ्चमीं नात्यगादेतद्, पर्वास्मद्गुरुगीरिति ॥११९॥
कम्पते मेरुचूलाऽपि, रविर्वा पश्चिमोदयः ।
नातिक्रामति पर्वेद, पञ्चमीरजनीं ध्रुवम् ॥१२०॥
राजाऽवदच्चतुर्थ्यां तत्, पर्व पर्युषण ततः ।
इत्यमस्तु गुरुः प्राह, पूर्वैरप्यादृत ह्यदः ॥१२१॥
अर्वागपि यतः पर्युषणं कार्यमिति श्रुतिः ।
महीनाथस्ततः प्राह, हर्षादेतत् प्रिय प्रियम् ॥१२२॥
यतः कुहूदिने पर्वोपवासे पौषधस्थिताः ।
अन्तःपुरपुरन्ध्र्यो मे, पक्षादौ पारणाकृतः ॥१२३॥
तत्राष्टमं विधातॄणां, निर्ग्रन्थाना महात्मनाम् ।
भवतु प्राशुकाहारैः, श्रेष्ठमुत्तरपारणम् ॥१२४॥
उवाच प्रभुरप्येतन्महादानानि पञ्च यत् ।
निस्तारयन्ति दत्तानि, जीवं दुष्कर्मसागरात् ॥१२५॥
पथश्रान्ते तथा ग्लाने, कृतलोचे बहुश्रुते ।
दानं महाफलं दत्त, तथा चोत्तरपारणे ॥१२६॥
तत-प्रभृति पञ्चम्याश्चतुर्थ्यामागत ह्यदः ।
कषायोपशमे हेतु, पर्व सांवत्सर महत् ॥१२७॥
श्रीमत्कालकसूरीणामेवं यान्ति वासराः ।
जग्मुः परमया तुष्ट्या, कुर्वता शासनोन्नतिम् ॥१२८॥

( ४ )

अन्येद्युः कर्मदोषेण, सूरीणां तादृशामपि ।
आसन्नविनयाः शिष्या दुर्गतौ दोहदप्रदाः ॥१२९॥
अथ शय्यातरं प्राहुः, सूरयोऽवितथं वचः ।
कर्मबन्धनिषेधाय, यास्यामो वयमन्यतः ॥१३०॥
त्वया कथ्यममीषां च, प्रियकर्कशवाग्भरैः ।
शिक्षयित्वा विशालायां, प्रशिष्यान्ते ययौ गुरुः ॥१३१॥
इत्युक्त्वाऽगात् प्रभुस्तत्र, तद्विनेयाः प्रगे ततः ।
अपश्यन्तो गुरूनूचुः, परस्परमवाङ्मुखाः ॥१३२॥
एष शय्यातरः पूज्यशुद्धिं जानाति निश्चितम् ।
एष दुर्विनयोऽस्माकं, शाखाभिर्विस्तृतोऽधुना ॥१३३॥
पृष्टस्तैः स यथौचित्यमुक्त्वोवाच प्रभुस्थितिम् ।
ततस्ते संचरन्ति स्मोज्जयिनीं प्रति वेगतः ॥१३४॥
गच्छन्तोऽध्वनि लोकैश्चानुयुक्ता अवदन् मृषा ।
पश्चादप्रस्थिता अग्रे, पश्चात्स्या प्रभवो ननु ॥१३५॥
यान्तस्तत्रामशृङ्गारात्, पथि लोकेन पूजिताः ।
नारी-सेवक-शिष्याणामवज्ञा स्वामिनं विना ॥१३६॥
इतः श्रीकालकः सूरिर्वस्त्रवेष्टितरत्नवत् ।
यत्याश्रये विशालायां, प्राविशच्छन्नदीधितिः ॥१३७॥
प्रशिष्यः सागरः सूरिस्तत्र व्याख्याति चागमम् ।
तेन नो विनयः सूरेरभ्युत्थानादिको दधे ॥१३८॥
तत ईर्यां प्रतिक्रम्य, कोणे क्वापि निर्जने ।
परमेष्ठिपरावर्त्तं, कुर्वन् तस्थावसद्धीः ॥१३९॥
देशनाऽनन्तरं भ्राम्यँस्तत्रत्यः सूरिराह च ।
किञ्चित् तपोनिधे ! जीर्ण !, पृच्छ सन्देहमादरतः ॥१४०॥
अकिञ्चिज्ज्ञो जरत्त्वेन, नावगच्छामि ते वचः ।
तथाऽप्यापृच्छ्य येनाहं, संशयापणमक्षमः ॥१४१॥
अष्टपुष्पीमथो पृष्टो, दुर्गमां सुगमामिव ।
गर्वाद् यत्किञ्चन व्याख्यादनादरपरायणः ॥१४२॥
दिनैः कैश्चित् ततो गच्छ आगच्छत् तदुपाश्रयम् ।
सूरिणाऽभ्युत्थितोऽवादीद्, गुरवोऽग्रे समाययुः ॥१४३॥
वास्तव्या अवदन् वृद्धं, विनैकं कोऽपि नाययौ ।
तेष्वागच्छत्सु गच्छोऽभ्युदस्थात् सूरिश्च सत्रपः ॥१४४॥

गुरुन्तासमयद् गच्छः, पट्टग्मः सूरिरप्यमून् ।
तं च तं चानुशिष्यैते, सूरिमित्यमवोधयन् ॥१४५॥
सिकतासंभृतः प्रस्थः, स्थाने स्थाने विरेचितः ।
रिक्तं यथाऽवदद् वत्स !, दृष्टान्तं विद्धयमूदृशम् ॥१४६॥
श्रीसुधर्मा ततो जम्बूः, श्रुतकेवलिनस्ततः ।
पट्स्थाने पातितास्ते च, श्रुते न्यूनत्वमाययुः ॥१४७॥
ततोऽप्यनु प्रवृत्तेषु, न्यूनं न्यूनतरं श्रुतम् ।
अस्मद्गुरुषु यादृक्षं, तादृग् न मयि निर्ममे ॥१४८॥
यादृग् मे त्वद्गुरोस्तन्न, यादृक् तस्य न तेऽस्ति तत् ।
सर्वथा मा कृथा वत्स !, गर्वं सर्वज्ञपं ततः ॥१४९॥
आनुपूर्व्यां च तत्पृष्टः, प्रभुर्व्याख्यानयत् तदा ।
अहिंसा-सूनृता-ऽस्तेय-ब्रह्मा-ऽकिञ्चनता तथा ॥१५०॥
राग-द्वेषपरीहारो, धर्मध्यानं च सप्तमम् ।
शुक्लध्यानमष्टमं च, पुम्भैरात्माऽर्चनाच्छिवम् ॥१५१॥
एवं च शिक्षयित्वा तं, मार्दवाविनये स्थितम् ।
आपृच्छ्य व्यचरत् सङ्घहीनोऽन्यत्र पवित्रधीः ॥१५२॥

( ९ )

श्रीसीमन्धरतीर्थेशनिगोदाख्यानपूर्वतः ।
इन्द्रप्रश्नादिकं ज्ञेयमार्यरक्षितकक्षया ॥१५३॥
श्रीजैनशासनक्षोणीसमुद्धारादिकच्छपः ।
श्रीकालकप्रभुः प्रायात्, प्रायाद् देवभुवं शमी ॥१५४॥
श्रीमत्कालकसूरिसंयमनिधेर्वृत्तं प्रभुत्वे श्रुतात्,
श्रुत्वाऽस्मीयगुरोर्मुखादवितथख्यातप्रभावोदयम् ।
संदर्भ्य मयका तमस्ततिहरं श्रेयःश्रिये जायतां,
श्रीसंघस्य पठन्तु तच्च विबुधा नन्द्याच्च कोटीः समाः ॥१५५॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः प्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीराम लक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीकालकाख्यानकं
श्रीप्रद्युम्नमुनीन्दुना विशदतः शृङ्गस्तुर्योऽभवत् ॥१५६॥

इति श्रीकालिकाचार्यप्रबन्धः ॥ ग्रन्थाग्र० १५७ । अ. २३ ॥

प्रभावकचरित्रग्रन्थकृत्प्रशस्तिः—

भास्वत्पात्रं कवि-मुनि-बुधग्राजितो राजसेव्यः,
सर्वेष्टार्थप्रदगुरुलसत्कल्पवृक्षावदातः ।
श्रीजैनांह्रिश्रयशुचिशिराः सिद्धिमद्भद्रशालो,
गच्छश्चान्द्रः सुरगिरितुलामश्नुवानः समस्ति ॥१॥

प्रद्युम्नसूरिरिति तत्र पुरा बभूव,
मन्दारपादपतुलः कलितोरुशाखः ।
यत्सङ्गमामृतरसैर्बहवः सुधर्मा-
धीशा भवन्ति सुधियः सुमनोभिरामाः ॥२॥

अल्लूसभायां विजिते दिगम्बरे, तदीयपक्षः किल कोशरक्षकः ।
दातुं प्रभोरेकपटं समालपत्, यमेकपट्टं जगदे सुधीषु यः ॥३॥

शिष्योऽस्याभयदेवसूरिरभवज्जाड्यान्धकारं हरन्,
गोभिर्भास्करवत् परां विरचयन् भव्याप्तवर्गे मुदम् ।
ग्रन्थो वादमहार्णवोऽस्य विदितः श्रौढप्रमेयोर्मिभृद्,
दत्तेऽर्थं जिनशासनप्रवहणे सांयात्रिकाणां ध्रुवम् ॥४॥

त्रिभुवनगिरिस्वामी श्रीमान् स कर्दमभूपति—
स्तदुप समभूत् शिष्यः श्रीमद्धनेश्वरसंज्ञया ।
अजनि सुगुरुस्तत्पट्टेऽस्मात् प्रभृत्यवनिस्तुतः
तदनु विदितो विश्वे गच्छः स राजपदोत्तरः ॥५॥

सुगुरुरजितसिंहस्तत्पदाम्भोजभानुः
समजनि जनितश्रीर्भव्यपङ्केरुहाणाम् ।
वचनकरवितानं यस्य देदीप्यमानं,
जडगतमपि सोढुं दुर्दशोर्न क्षमन्ते ॥६॥

श्रीवर्द्धमानसुगुरुः, कर्कोतनधामसङ्गतस्तदनु ।
मतसङ्घचारिसरणः, समजनि जनलग्नदोषहरः ॥७॥

तत्पट्टभूमिरुहपोषतपात्ययश्रीः, श्रीशीलभद्र इति सूरिपदं प्रपेदे ।
धर्मोपदेशजलवाहजलैर्यदीयः, प्रापोन्नतिं जगति कीर्त्तिलतावितानः ॥८॥

तदंह्रिसरसीहंसः, सूरिः श्रीचन्द्र इत्यभूत् ।
विवेचकः शुचिः सद्भिस्तद्वाचानुपजीवनात् ॥९॥

अर्थप्रकाशिका शास्त्रवस्तुपात्रमहाजनम् ।
घनसाररसाढ्या यन्मतिः पुन्नागरङ्गभृत् ॥१०॥

सूरिः श्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी-
यन्नामस्मृतितोऽप्ययं हरति च श्रीधर्मघोषप्रभुः ।
कल्याणावलिकन्दलालिजलदः, श्रीसर्वदेवो गुरु-
श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेन्द्रार्चिताः ॥११॥

श्रीपात्रं ■ जिनेश्वरप्रभुरभूत् संघाम्बुधौ चन्द्रमाः,
सूरिः श्रीजिनदत्त इत्युदितधीरुचिद्रविद्याद्युतिः ।
चारित्रामलशैलनन्दनवनं श्रीपद्मदेवप्रभुः,
श्रीश्रीचन्द्रमुनीश्वरस्य जयिनः शिष्या अभूवन्नमी ॥१२॥

श्रीसद्गुरोहणधराधरचारुरत्नं, श्रीपूर्णभद्रगुरुरभ्युदितः पदेऽस्य ।
यस्सन्निधिस्थितिभृतो भुवि भव्यसार्थां वस्तूनि विश्वविषयाणि विलोकयन्ति ॥१३॥

तत्पट्टोदयपर्वतामृतरुचिः प्रीणन्चकोरव्रजं,
श्रीचन्द्रप्रभसूरिरद्भुतमतिर्ज्योत्स्नानिधानं बभौ ।
आश्चर्यं न कलङ्कधाम तमसाऽनुल्लङ्घ्यमूर्तिं भवं,
पाथोधिं क्षणुते विनम्रकमलोल्लासी न दोषाकरः ॥१४॥

आचार्यः श्रीप्रभाचन्द्रस्तत्पादाम्भोजषट्पदः ।
चित्रं यः सुमनःस्थोऽपि, सदानम्रगुरुक्रमः ॥१५॥

श्रीहेमचन्द्रसूरीणामनुध्यानमवाचितः ।
पर्वणः परिशिष्टस्य, दृब्धेः सम्पुष्टवासनः ॥१६॥

श्रीवज्रानुप्रवृत्तप्रकटमुनिपतिप्रमुद्धत्तानि तत्तद्-
ग्रन्थेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् संकलय्य ।
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं,
जिज्ञासैकाग्रहाणामधिगतविधयेऽभ्युद्यं स प्रतेने ॥१७॥ त्रिभिर्विशेषकम् ॥

अत्र पूर्णं हि यत् किञ्चित्, संप्रदायदिभेदतः ।
मयि प्रसादमाधाय, तच्छोधयत कोविदाः ॥१८॥

आराधितं मया शून्यं, यया तुष्टं स्वतामदात् ।
निजोक्तौ स्थापितं तन् मा, कथाकन्यीकृतास्ततः ॥१९॥

रोदोरन्ध्रगसिद्धकिन्नरगणानुल्लङ्घ्यगूढस्थिति-
स्तुङ्गत्वोदितदत्तशेवधिरविर्पीठार्थसंपच्चिकन् ।
पूरलप्रभया तिरस्कृतपरज्योतिःप्रकाशोदयः,
श्रीपूर्वर्षिचरित्ररोहणगिरौ स्याद्वारर्जीन्दुभुवः ॥२०॥

श्रीमद्युम्नगुरोर्हिमांशुविशदो बोधः शुचेः सङ्गतो,
मिथो रक्तरुचा मम मतिपदास्फुर्जद्यशःपूरुषः ।
ज्ञानश्रीपुरतः पदार्थघटनाविम्बद्वयोद्दङ्कनाद्,
जातो ग्रन्थमिषेण साक्षरशुचिर्द्रम्मश्चिरं नन्दतु ॥२१॥

वेदानल शिखि-शशधर(१३३४)वर्षे चैत्रस्य धवलसप्तम्याम् ।
शुक्रे पुनर्वसुदिने, सपूर्णं पूर्वऋषिचरितम् ॥२२॥

शिक्षाप्रसादवशतः स्वगुरोर्ययैनमायासमत्र दधता यदवापि पुण्यम् ।
व्याख्यानसक्तमनसः श्रवणादराश्च, श्रेयस्सुसङ्गममनुत्तरमाप्नुवन्तु ॥२३॥

ग्रन्थस्य मानमस्य, प्रत्यक्षरगणनया सुनिर्णीतम् ।
पञ्चसहस्राः सप्त च, शतानि चतुरधिकसप्ततियुतानि ॥२४॥

प्रशस्तिश्लोक४० ॥ शिवमस्तु ॥

## [१८]

### अज्ञातसूरिविरचिता

# कालिकाचार्यकथा।

श्रीवीरवाक्यानुमतं सुपर्व, कृतं यथा पर्युषणाऽऽख्यमेतत् ।
श्रीकालिकाचार्यवरेण सद्भिः, तथा चतुर्थ्यां शृणु पञ्चमीतः ॥१॥

श्रीय(म)न्महावीर चउवीसमु तीर्थंकर नमस्करीनइ श्रीकालिकसूरि आचार्यइं श्रीपचमी थकु पजूसणनुं पर्व चउथिइं आणिउं । श्रीमहावीरनइ वचनिइं । तेह वात ऊपरि आजनइ दिवसि श्रीकल्पना आठ व्याख्यात(न)नी वाचना हवी नउमी(मी) वाचना श्रीकालिकसूरिनी कथा कहीइ छइ ॥१॥

समग्रदेशागतवस्तुसारं, पुरं धरावासमिहास्ति तारम् ।
तत्रारिभूपालकरीन्द्रसिंहो, भूवल्लभोऽभूद् भुवि वज्रसिंहः ॥२॥

धारावास इसिइं नामिइ पुर नगर मालव देशमाहि छइ । पुण ते नगर किसिउं जाणिवूं । 'समग्रदेशाग[त]-वस्तुसारम्' समग्र सघला देस थकी आगत आवी वस्तु तेणिइं करी सार मनोज्ञ छइ । अ(आ) नगर सघलांमाहि सार छइ । तेणिइं नगरि वज्रसिंह इसिइ नामिइ राज्य पालइ छइ । राजा किसिउ छइ अरि वइरी रूपीया करीन्द्र तेहनां कुंभस्थळ विदारिवानइं सिंह प्राय सिंघश्रीपु वर्त्तइ ॥२॥

लावण्यपीयूषपवित्रगात्रा, सद्धर्मपात्रानुगतिः सदैव ।
तस्याजनिष्टातिविशिष्टरूपा, राज्ञी च नाम्ना सुरसुन्दरीति ॥३॥

सूरिः श्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी–
यन्नामस्मृतितोऽप्यघं हरति च श्रीधर्मघोषप्रभुः ।
कल्याणावलिकन्दलालिजलदः, श्रीसर्वदेवो गुरु-
श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेन्द्रार्चिताः ॥११॥
श्रीपात्रं स जिनेश्वरप्रभुरभूत् संयाम्बुधौ चन्द्रमाः,
सूरिः श्रीजिनदत्त इत्युदितधीरुन्मिद्रविद्याद्युतिः ।
चारित्रामलशैलनन्दनवनं श्रीपद्मदेवप्रभुः,
श्रीश्रीचन्द्रमुनीश्वरस्य जयिनः शिष्या अभूवन्नमी ॥१२॥
श्रीसद्गुरोहणधराधरचारुरत्नं, श्रीपूर्णभद्रगुरुरभ्युदितः पदेऽस्य ।
यत्सन्निधिस्थितिभृतो भुवि भव्यसार्था वस्तूनि विश्वविषयानि विलोकयन्ति ॥१३॥
तत्पट्टोदयपर्वताग्रतरुचिः श्रीगौणेश्वरकोरग्रजं,
श्रीचन्द्रप्रभसूरिरद्भुतमतिज्योत्स्नानिधानं बभौ ।
आश्चर्यं न कलङ्कधाम तमसाऽनुल्लङ्घ्यमूर्ति भवं,
पाथोधिं स्नपुते विनम्रकमलोल्लासी न दोषाकरः ॥१४॥
आचार्यः श्रीप्रभाचन्द्रस्तत्पादाम्भोजषट्पदः ।
चित्रं यः सुमनःस्थोऽपि, सदानवगुरुक्रमः ॥१५॥
श्रीहेमचन्द्रसूरीणामनुध्यानमवृत्तितः ।
पर्वणः परिशिष्टस्य, दृष्टेः सम्पुटवासनः ॥१६॥
श्रीवज्रानुप्रवृत्तप्रकटमुनिपतिप्रमद्रवृत्तानि तत्तद्-
ग्रन्थेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् संकलय्य ।
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं,
जिज्ञासैकाग्रहाणामधिगतविषयेऽभ्युद्यं स प्रतेने ॥१७॥ त्रिभिर्विशेषकम् ॥
अत्र सूणं हि यत् किञ्चित्, संप्रदायविभेदतः ।
मयि प्रसादमाधाय, तच्छोधयत कोविदाः ॥१८॥

आराधितं मया शून्यं, यया तुष्टं स्वतामदात् ।
निजोक्तौ स्थापितं तत् प्राक्, कयाकन्यीकृतास्ततः ॥१९॥
रोदोरन्ध्रगसिद्धकिन्नरगणानुल्लङ्घ्यगृह्यस्थिति-
स्तुङ्गत्वोदितहृत्तचरित्रधिरतिप्रौढार्थसंपच्छिकृत् ।
पूरत्नप्रभया तिरस्कृतपरज्योतिःप्रकाशोदयः,
श्रीपूर्वर्षिचरित्ररोहणगिरौ स्यादास्तीन्दुयुवः ॥२०॥

श्रीमद्युम्नगुरोर्हिमांशुविशदो बोधः शुचेः सङ्गतो,
मिथो रक्तरुचा मम प्रतिपदास्फुर्जद्यशःपूरुषः ।
ज्ञानश्रीपुरतः पदार्थघटनाविम्बद्वयोद्दङ्कनाद्,
जातो ग्रन्थमिषेण सासरशुचिर्द्रम्माश्चिरं नन्दतु ॥२१॥

वेदानल शिखि-शशधर(१३३४)वर्षे चैत्रस्य धवलसप्तम्याम् ।
शुक्रे पुनर्वसुदिने, संपूर्णं पूर्वऋषिचरितम् ॥२२॥
शिक्षाप्रसादवशतः स्वगुरोर्यदेनमायासमत्र दधवा यदवापि पुण्यम् ।
व्याख्यानसक्तमनसः श्रवणादराश्च, श्रेयस्सुसङ्गममनुत्तरमाप्नुवन्तु ॥२३॥
ग्रन्थस्य मानमस्य, प्रत्यक्षरगणनया सुनिर्णीतम् ।
पञ्चसहस्राः सप्त च, शतानि चतुरधिकसप्ततियुतानि ॥२४॥

प्रशस्तिश्लोक४० ॥ शिवमस्तु ॥

## [१८]

अज्ञातसूरिविरचिता

# कालिकाचार्यकथा ।

श्रीवीरवाक्यानुमतं सुपर्व, कृतं यया पर्युषणाऽऽख्यमेतत् ।
श्रीकालिकाचार्यवरेण सद्धि, तथा चतुर्थ्यां शृणु पञ्चमीतः ॥१॥

श्रीय(म)न्महावीर चउवीसमु तीर्थंकर नमस्करीनइं श्रीकालिकसूरि आचार्यइं श्रीपंचमी थकु पजूसणनूं पर्व चउथिइं आणिउं । श्रीमहावीरनइ वचनिइं । तेह वात ऊपरि आजनइ दिवसि श्रीकल्पना आठ व्याख्यात(न)नी वाचना हवी नवमी(मी) वाचना श्रीकालिकसूरिनी कथा कहीइ छइ ॥१॥

समग्रदेशागतवस्तुसारं, पुरं धरावासमिहास्ति तारम् ।
तत्रारिभूपालनरीन्द्रसिंहो, भूवल्लभोऽभूद् भुवि वज्रसिंहः ॥२॥

धारावास इसिइं नामिइ पुर नगर मालव देशमाहि छइ । पुण ते नगर किसिउं जाणिवूं । 'समग्रदेशाग[त]-वस्तुसारम्' समग्र सघला देस थकी आगल आवी वस्तु तेणिइं करी सार मनोज्ञ छइ । अ(आ) नगर सघलांमाहि सार छइ । तेणिइं नगरि वज्रसिंह इसिइं नामिइं राय पालइ छइ । राजा किसिउ छइ अरि वइरी रूपीया करीन्द्र तेहनां कुंभस्थल विदारिवानइ सिंह प्राय सिंघश्रीपु वर्त्तइ ॥२॥

लावण्यपीयूषपवित्रगात्रा, सद्धर्मपात्रानुगतिः सदैव ।
तस्याजनिष्टातिविशिष्टरूपा, राज्ञी च नाम्ना सुरसुन्दरीति ॥३॥

ते वज्रसिंह रायनइं सुरसुंदरी राणी छइ । पुण ते राणी किसी छइ ? लावण्यरूपीउं पीयूष अमृत तेणिइं करी जेह राणीनु गात्र देह पवित्र छइ । सत प्रधान [घ]मैंनु पात्र स्थानक छइ । अनइ वली राणी केहवी छइ ? अतिहे(हि) विशिष्ट रंभा तिलोत्तमा इंद्रनी इंद्राणी तेपाहिं अतिहिं विशिष्ट रूप छइ ॥३॥

तत्कुक्षिभूः कालकनामधेयः, कामानुरूपोऽजनि भूपसूनुः ।
सरस्वती रूपवती सुशीलवती स्वसा तस्य नरेन्द्रसूनोः ॥४॥

ते सु[र]सुंदरी राणीनी कूश(ख)इं ऊपनु कालिक इसिइं नमिइं, नामिइं रूपवंति सुसीलावती लावण्यवती भगिनी बहिनी हुंती वर्त्तइ ॥४॥

अथान्यदोद्यानवने कुमारो, गतो युतः पञ्चशतैश्च सुभ्यैः ।
दृष्ट्वा मुनीन्द्रं गुणसुन्दराख्यं, नत्वोपविष्टो गुरुसंनिधाने ॥५॥

अथ पछलानु अनन्तर ते कालिक कुमर पांचसइं पायके परवरिउ उद्यानवनमाहिं गिउ । तुरंगम खेलाविवा भणीनइ । तेसिइ ते वनमाहि श्रीगुणसुंदरसूरि पुहुता । वृक्ष आंबानु ते हेठलि बइठा दीठा । कालिक कुमरिइं गुरु दीठा । पूठिइं तुरंगमनी रामति मूकीनइ गुरु वांद्या । आगलि जई बहुठु परिवारसहित ॥५॥

विद्युल्लतानेकपकर्णताललीलायितं वीक्ष्य नरेन्द्रलक्ष्म्याः ।
युष्मादृशाः किं प्रपतन्ति कूपे, भवस्वरूपे सुविवेकिनोऽपि ॥६॥

हे नरेंद्र ! अहो राजन् ! तम्हश्रीषा पुण्यवंत भाग्यवंत संसाररूपीया कुयामाहि किस्या कारण पडइं छइं ! संसार केहवु छइ ? जिसिउ वीजनु झात्कार चपल हुइ । जिस्या गजेंद्र हस्तीना कर्ण कान चपल हुइं । जिसिउं संध्यातणु राग क्षण एकमाहि विग्रार थइ । जिसिउं अश्व घोडातणु पुच्छ चपल हुइ । जिस्या समुद्रनी कलोल चपल हुइं । पहवी राज्यनी लक्ष्मी चपल छइ । तम्हश्रीषानइं एहवा संसार चपलमाहि राज्यलक्ष्मी अनेरीइ लक्ष्मी सर्वमंहाण चपल वर्त्तई । तम्हो सुविवेकी पुण्यवत । एहवइ संसारि वासि तम्हनइ वसवा युक्त नही ॥६॥

एवं परिहाय कुमार ! शुद्धबुद्धिं कुरुष्वाशु सुधर्ममार्गे ।
आकर्ण्य कर्णामृतवृष्टिकल्पं, गुरोर्वचः शीघ्रमिति प्रबुद्धः ॥७॥

एहवु गुरुनु उपदेश सांभलीनइ कालिक कुमरनइ धर्मकरणी करवानी बुद्धि ऊपनी । गुरुनां वचन अमृत समान सांभलीनइ संसारनइ विषइ विराग ऊपनु । मनि वैराग्य ऊपनुं । संसार असारतु(सु) थिउ । चारित्र ऊपरि भाव ऊपनु ॥७॥

आदात् तदा पञ्चशतीपदातियुक्तो व्रतं सूरिपदं स लेभे ।
सरस्वती वृद्धगिनी च पश्चाज्जग्राह दीक्षां निजबन्धुबोधात् ॥८॥

तदा तेणिइ समइ तेणिइं प्रस्तावि कालिक कुमरिइं वैराग्यनइ योगिइं माता पिता मोकलावी प्रीछवीनइ श्रीगुणसुंदरसूरि कन्हलि दीक्षा लीधी । पाचसइ पायके कालिककुमर साथइं दीक्षा लीधी । अनइ केतइ कालि ते कालिक रिषिनइ आचार्य पद हवुं गच्छनायक कहवा । अनइ सरस्वती बहिनिइं ति गार पूठिइ केतलइं कालि गिइं हुंतइ आपणा भाइ कालिककुमर कन्हलि दीक्षा लीधी ॥८॥

श्रीकालिकाचार्यवरा धरायां, कुर्वन्ति भव्यावनिधर्मवृष्टिम् ।
अथान्यदाऽवन्तिपुरीमगुस्ते, सरस्वती चापि जगाम तत्र ॥९॥

---

१ कालिक° P । २ कामानुरूपो S । ३ °तो वृतः S ।

ते श्रीकालिकसूरि पृथ्वीमंडलि भव्यजीव रूपिणी पृथ्वीइं धर्मवृष्टि करता विहारक्रम करइ छइ । एकवार विहार करता अवंती कहतां ऊजेणीइ पुहुता । सरस्वती महासती साथिइ विहारक्रम करती ऊजेणीइं पुहुती ॥९॥

साध्वीसमेताऽपि गताऽथ बाह्यभूमौ नरेन्द्रेण निरीक्षिता सा ।
ईदृक्सुरूपा यदियं सुशीला, नूनं वराको मृत एव कामः ॥१०॥

अथ एतलानु अनंतर ते सरस्वती महासती एक वार बाहिरि भूमि पुहुती हती । तेसिइ गर्दभिल्ल राजा रवाडी गिउ हुतु । ते महासती दृष्टिइ दीठी तिसिइ मनमाहि चींतवरा लागु । नूनं निश्चइ काम कंदर्प जीवतु नथी मूइ वर्त्तइ । जु एहवी रूपवंति स्त्री अनइ सुशील वर्त्तइ । ए वात आयुकी जाणीइ । माहरइ एहवी स्त्री घरि हुइ तु माहरउं भाग्य ॥१०॥

श्रीकालिकाचार्यसहोदरत्वं, पूत्कुर्वती ही जिनशासनेश ! ।
यद्गर्दभिल्लेन नृपाधमेन, मां नीयमानां निजवेश्म रक्ष ॥११॥

तिसिइ गर्दभिल्लराइं सयर्ज्ञा(संज्ञा) करी सरस्वती महासती अपहरावी । महासती तिसिइ पोकारि गाढिइं करवा लागी । अहो श्रीकालिकाचार्य ! अहो श्रीजिनशासनेश ! राजान सघलामाहि अधमाधम गर्दभिल्ल महापापी राजा मझनइं अपहरी जाइ छइ । आपणइ घरि लेइ जाइ छइ राषु(खु) राषु(खु) ॥११॥

इति ब्रुवाणा कुनृपेण युग्मिर्नीता निजं धाम महासती सा ।
ज्ञात्वा च वृत्तान्तममुं चुकोप सूरिर्गुणश्रेणिभूमिः ॥१२॥

तदा तेणिइ समइ ते सरस्वती महासती ते पापिष्ठ गर्दभिल्लरायने सेवके रायना गृहांगणमाहि लीधी । तिणि वारइ श्रीकालिकसूरि आचार्ये ते वात सांभली । ति वारइं अत्यंत अतिहि कोप चडिउ । प्रवाहिइं ते कालिकाचार्य समग्र गुणतणी भूमिका छइं । पुण जिनशासनि उड्डाहनु कारणहार ते ऊपरि कोप थाइ एतलइं युक्त छइ ॥१२॥

श्रीकालिकाचार्यगुरुर्नृपान्ते, जगाम कामं नयवाक्यपूर्वम् ।
नृपं जगादेति नरेन्द्र ! मुञ्च, स्वसारमेतां मम यद्व्रतस्थाम् ॥१३॥

श्रीकालिकसूरि आचार्य रायनइ समीपि गिया । अनेक न्या(न्या)यना वचन बोल्यां ते राजाश्राय धर्मनु पालक माहरी बहिनि व्रत पालइ छइ । ते मेल्हि जिम आपणुं व्रत रूडी परिइं पालइ ते व्रतनु विचार तुम्हनइ आवइ ॥१३॥

अन्योऽपि यो दुष्टमतिः कुशीलो, भवेत् त्वया स प्रतिषेध्य एव ।
अन्यायमार्गे स्वयमेव गच्छन्, न लज्जसे सत्यमिदं हि जातम् ॥१४॥

अहो राजन् ! अनेरइ जे कोइ दुष्टमति हुइ, कुशील हुइ कुआचारि ही(हु)इ, तेहनइ राजा सीष(खा)मण दिइ । तेहनइ अन्याय करता वारइ । तूं एवडु पृथ्वीपति राजा स्वयमेव करतउ हुंतउ लाजतउ नथी । एतलइं ए वात साची हुवी । किसी ते वार्ता ॥१४॥

+यत्रास्ति राजा स्वयमेव चौरो, भाण्डीवहो यत्र पुरोहितश्च ।
वनं भजध्वं ननु नागरा भो !, यतः शरण्याद् भयमत्र जातम् ॥१५॥

जिम लोके माहिल रूषा(खा)ण कहवाइ ते हवडां खरउ ऊषा(खा)णु दीसइ छइ । जेणिइं नगरि राजा स्वयमेव

+ अन्यदुक्षमाराध्य ॥

चोर हुइ डीलिइ चोरी करइ अन[ई] पुरोहित डीलि माटीतु पालणहार क्लाली हुइ तेणिइ नगरि अहो नागरिक लोको वनवास लिउ तउ छूटउ । बीजी परिइं तिहा रहिया वणसीजीइ । किस्या भणी ? जिहा थकुं शरण जोईइ तिहा जि थकु भय ऊपजइ तउ किसिउं कीजइ ? ॥१५॥

नरेन्द्रकन्याः किल रूपवत्यस्त्वदवरोधे ननु सन्ति बह्व्यः ।
तपःकृशां जल्लभरातिजीर्णवस्त्रां विमुञ्चाशु मम स्वसारम् ॥१६॥

अहो राजन् ! ताहरी आज्ञाना पालणहार अनेक राजान अनेक व्यवहारीया प्रमुख लोक तेहनी कन्या घणीइ तम्हारी आज्ञामाहि छइ । तेहनूं पाणिग्रहण करि । पुण ए महासती तपिइं करी दूबली श्लेष्मा करी भरी अतिजीर्णवस्त्रनी पहिरिणहारि माहरी बहिनि मूंकि ॥१६॥

निशम्य सूरीश्वरवाक्यमेतच भाषते किञ्चिदिह क्षितीशः ।
श्रीकालिकाचार्यवरोऽथ संघस्याग्रे स्ववृत्तान्तमवेदयत् तत् ॥१७॥

श्रीकालिकसूरिनु वचनं सांभलीनइं राजा गर्दभिल्ल वलतु(उ) उत्तर न आपइ न बोलइ । श्रीकालिकसूरि पछइ पोसालइ आवी समग्र सघलु संघ तेडावीनइ तेह आगलि सघलु वृत्तान्त कहिउ ॥१७॥

संघोऽपि भूपस्य सभासमक्षं, दक्षं वचोऽभाषत यन्नरेन्द्र ! ।
न युज्यते ते यदिदं कुकर्म, कर्तुं ममो ! पासि पितेव लोकम् ॥१८॥

ति वार पूठिइं श्रीसंघ सघलु मिली रायनी सभा गिउ । राय वीनविउ, अहो नरेंद्र ! हुं प्रजालोकनइ पितातणी परिपालअं । तुम्ह रहिं ए कुकु(क)र्म करवा युक्त नही । तुम रहिं ए अन्याय करवा युक्तु नही ॥१८॥

इति ब्रुवाणेऽपि यथार्थयुक्तैः, संघे न चामुञ्चदसौ महीशः ।
महासतीं तामिति तन्निशम्य, *कोपेन सन्धां कुरुते मुनीशः ॥१९॥

श्रीसंघिइं रायनइं वीनती कीधी । यथार्थ वात कही । पुण राजाइं सर्वथा न मूकी । राजा वल्तु उत्तरइ न दिइ । पछइ श्री[सं]घिइ तिहां थकइ आवी गुरु वीनव्या । पछइ गुरे श्रीसंघ आगलि प्रतिज्ञा कीधी ॥१९॥

ये प्रत्यनीका जिनशासनस्य, संघस्य ये चाशुभवर्णवाचः ।
उपेक्षकोड्डाहकरा धरायां, तेषामहं यामि गतिं सदैव ॥२०॥

जे मनुष्य जिनशासन ऊपर वैरभाव वहइ महाप्रत्यनीक हुइ । अनइ जे वली जिनशास[न]ना अवर्णवाद बोलइ जे जिनशासनि उड्डाह करई तेहवा मनुष्यनइ सीपा(खा)मण देउ । तेहनी गतिइ सदाइ जाउं तेहनु निवारिवु करउं ॥२०॥

यद्येनमुर्वीपतिगर्दभिल्लं, कोशेन पुत्रैः सबलं च राज्यात् ।
नोन्मूलयामीति कृतप्रतिज्ञो, विधाय वेषं ग्रहिलानुरूपम् ॥२१॥

माहरा जाण्यानु प्रमाण जु ए गर्दभिल्ल राजा वेटासहित भंडारसहित अंतेउरसहित राज्य पाल्हु उन्मूली करी न नाखू तु कहिज्यो । इसी प्रतिज्ञा श्रीसंघ आगलि कीधी । प्रतिज्ञा कीधा पूठिइं श्रीकालिकसूरे गहिलानु वेस कीधु ॥२१॥

भ्रमत्पदः कर्दमलिप्तगात्र., सर्वत्र जल्पन् नगरीं विशालाम् ।
श्रीगर्दभिल्लो नृपतिस्ततः किं, भो ! रम्यमन्तःपुरमस्य किं वा ॥२२॥–त्रिभिर्विशेषकम् ॥

---

* दीक्षार्थं दत्ता वन्दनादिपूर्वकं ॥ अन्यथाराद्धे गर्दभिल्लं कृत्वा बोलाटयेऽहं तदनु च कालिकाचार्यं एव–इति भावार्थः ॥
४ युग्मम् P ।

अथ एतला अनंतर श्रीकालिकसूरि आपणुं शरीर कादवि खरडी त्रिक चतुष्क चाचरि भ्रमण करतु हीडइ । मुखिइं इसिउं बोलइ । विशाल(ला) नगरीमाहि श्रीगर्दभिल्ल राजा राज्य पालइ छइ तु किसिउं ? अथवा ए रायनइं अंत पुर रूडुं छइ किसिउं ! इसिउ वच[न] नगरी भमतु बोलइ । ग्रथिलपणइं करी बाह्य प्रकारिइं अंतरग साजापणुं छइ ॥२२॥

इत्यादि जल्पन्तमसत्प्रलापं, मुनीश्वरं वीक्ष्य व्यजिज्ञपंस्तम् ।
नृपं कुलामात्यवरा वरेण्यं, जातं न राजन्निति मुञ्च साध्वीम् ॥२३॥

श्रीकालिकसूरि ग्रथिलपणइं बोल्तु सांभली रायना घरना कुलामात्य रायनइं वीनववा लागा । अहो राजन्! अम्हो ताहरा राज्यना कुलामात्य वीनवुं छउं । वीनती अवधारि । ए साध्वी महासती मूंकि परही । तुं ज्ञा(न्या)यवंत राजा तुम्ह रहइं ए साध्वी राषि(खि)वा युक्त नही, परही मूंकि ॥२३॥

शिक्षां ददध्वं निजपितृ-बन्धु-पुत्रेषु गच्छन्तु यथाग्रहष्टेः ।
श्रुत्वेति सूरिर्गत एव सिन्धोर्नद्यास्तटं पश्चिमपार्श्वकूलम् ॥२४॥

राय आ(अ)मात्य प्रतिइं कहवा लागु, अहो अमात्यो ! तम्हो आपणइ घरि जई बेटा बेटी प्रमुख कुटुंबनइं शीषा(खा)मण दिउ । माहरी दृष्टि आगलि थका परहा जाउ । रहिसिउ तु नही भला । आ(अ)मात्ये पाछा आवी आचार्यनइं जीणाविउं । ति वार पूठिइं श्रीकालिकसूरि भले शकुने चाल्या । पश्चिम दिसिइं सिंधु नही(दी)नइं पश्चिम दिशिनइं तटि पेलइ कांटइ जई रह्या ॥२४॥

ये तेषु देशेषु भवन्ति भूपास्ते साहयः प्रौढतमस्य तेषु ।
एकस्य साहेः स गृहेऽवसद्य, सदा सुदैवज्ञनिमित्तविज्ञः ॥२५॥

जे तेणिइ देसि राजान हुइं ते राय समिहुनइं साहि इंसिउं नाम कहीइ । तिहां छन्नूं राय मोटा छइं ते माहि मोटेरु एक साहि छइ तेनइ (तेह)नी उलग करवा लागा । श्रीकालिकसूरि ज्योतिष्क समय जाणइं । निमित्त सर्व जाणइं ॥ २५ ॥

अनागतातीतनिमित्तभावैर्वशीकृतः सूरवरैः स साहिः ।
भक्तिं विधत्ते विविधां गुरूणां, सर्वत्र पूज्यो लभते हि पूजाम् ॥२६॥

श्रीकालिकसूरि आचार्ये अनागत ज्ञान अतीत ज्ञान वर्तमान ज्ञाननइं कहवइं । ते वडु साहि राजा आपणइ वशि कीधउ । ते साहि गुरनी भक्ति घणी करइ । एतलइं युक्त छइ । जे माहि गुण हुइं । रूडे गुणे करी पूज्य सर्वत्र सघलइ पूजा लहइ ॥ २६ ॥

तमन्यदा कृष्णमुखं विलोक्य, पप्रच्छ साहिं मुनिपः किमेतत् ? ।
तेनाचचक्षे मम योऽस्ति राजा, साहानसाहिः स च भण्यतेऽत्र ॥२७॥

एकवार आचार्ये साहि राजा काल मरवु दीठु । जीवतव्यनी आशा गई । इसिउ दीठउ । तिवारइं गुरे पूछिउं । आज कालमुखा किस्या कारण ? तेणिइं साहिइं कहिउं । अम्ह छन्नूं रायनु स्वामी मूलगु साहानुसाहि वडु ठाकुर छइ ते सा[हा]नुसाहिनइं अम्ह छन्नूं श्रीषा रायना सहस छइं ॥ २७ ॥

तेनात्र लेखः प्रहितो ममेति, स्वमस्तकं शीघ्रतरं प्रदेयम् ।
पञ्चाधिकाया नवतेर्नृपाणां, ममानुरूपश्छल एष भर्तुः ॥२८॥

५ घदेव दे° P । ६ °हानुसा° P ।

ते साहानुसाहिनइं कुणिहि अम्हारये वयरीइं चाही कीधी। तेणिइं करीय तु कोप हुउ। मझनइं लेस मोकलिउ छइ। आपणुं मस्तक मोकले जिम साहरउ बेटउ राज्य पालइ। नहीतरि समर्थ थई रहिजे। एहवु आदेश आविउ छइ। जु मस्तक मोकलीइ तु कुटंब परिवारनूं सूत्र रहइ नहीतरि कुल क्षय हुइ। एहवु आदेश मझ पूठिइं पंचाणूं रायनइं एहवु जि आदेश आविउ छइ। तेणिइं करी जीवितव्य जातइं कालमुख थिया छईइ ॥ २८ ॥

एकत्र सर्वे सबलं मिलित्वा, हिन्दूकदेशं चलताशु यूयम् ।
गुरोर्निदेशादिति तैः महद्भिर्भूपैः प्रयाणं झटिति प्रदत्तम् ॥२९॥

गुरे स(सा)हि राजानूं वचन सांभली वलतुं कहीउं। तम्हो छन्नूं राय एकठा मिलीनइं हिंदूना देस मोटा छइ तेह भणी नइं तम्हो चालु। तिहा तम्यो(म्हो) ते देस लेई समाधिइं राज्य पालु। ते वचन सांभली गुरुना वचननी प्रतीति चत्ति आणी। समलाइ एकठा कटक सहित मिलीनइं पीयाणुं दीधुं ॥२९॥

उत्तीर्य सिन्धुं कटकं सुराष्ट्रादेशे समागत्य सुखेन तस्थौ ।
सर्वेऽपि भूपाः सुगुरोश्च सेवां, कुर्वन्ति बद्धाञ्जलयो विनीताः ॥३०॥

तेह साहिनां कटक सिंधुनदी उतरीनइं सुराष्ट्रदेशा सोरठमाहि आवी रहिया। तिसिइ वर्षा लागु। सगलाइ छन्नूं राय श्रीकालिकसूरिने सेवा करइं। तिन्हइं हाथा जा(जो)डीनइं नित्य सेवा करइं विनयवंत हुंता ॥३०॥

वर्षावसाने गुरुणा बभाषे, अवन्तिदेशं चलतेति यूयम् ।
नृपं निगृह्णीत च गर्दभिल्लं, गृह्णीत राज्यं प्रविभज्य शीघ्रम् ॥३१॥

वरसातनइ प्रांति छेहडइ श्रीकालिकसूरे साहनइं कहिउं अवंतीदेस भणी चालउ। तिहां गर्दभिल्ल राजा छइ तेहनु निग्रह करउ राज्य यकु उच्छेद। पछइ देस वहिचीनइं आपणां आपणां राज्य पालु ॥ ३१॥

अत्रापि तैः शम्बलमस्ति [1]नो नः, किं कुर्महे कालिकसूरिरेवम् ।
ज्ञात्वा च तेभ्यः शुभचूर्णयोगे, कृत्वेष्टिकाः स्वर्णमयीर्ददौ सः ॥३२॥

तेह छन्नूं राए कालिकसूरि वीनव्या। अम्हारइं संबल खूटां किसिउं कीजइ। ति वारइं कालिकसूरिइं इटवाह मोटु वलतु देखीनइं माह माहि चूर्णसूं किउं। ते चूर्णनइ योगिइं सघलीइ ईट सूनानी थई। छन्नूं रायनइं वहिचीनइ आपी॥३२

ढक्कानिनादेन कृतप्रयाणा, नृपाः प्रचेलुर्गुरुलाटदेशम् ।
स्वदेशनाथौ बलमित्र-भानुमित्रौ गृहीत्वाऽगुरवन्तिसीमाम् ॥३३॥

छन्नूं राय ढका इसिइं नामि वाजित्रनइं निनादिइं पीयाणां कीधां। श्रीकालिकसूरि लाडदेसमाहि थका बलमित्र-भानुमित्र गुरुना भाणेज तेहनइं मिली ते साथिइं लीधा कटकसहित ते हू कटक अनइ साहिनां कटकसहित अवंतीनगरीनी सीमइं पुहता ॥ ३३ ॥

श्रुत्वाऽऽगतांस्तानभितः स्वदेशसीमां समागच्छदवन्तिनाथः ।
परस्परं कुन्तधनुर्लतामिर्युद्धं द्वयोः सैनिकयोर्बभूव ॥३४॥

ते कटक आपणी सीमइं आव्यां साभली गर्दभिल्ल राजा सबल गज तुरंगम रथ पायक सहित साहमु आविउ। परस्परइं भाले सांगे तोमर तीर शस्त्र वेल शक्तिका मुद्गरने प्रहारे करी अत्यंत अतिहिं युद्ध हवां ॥३४॥

---

[1] अत्रापि ते P । [4] नो न कि P ।

